न्यति' इत्युक्तमिनीदमपि तेन द्रष्टव्यम् । अनन्तरे यञ् नदुर्ण इत्यपि नाश्रीय-माणेऽत्र नुगमगतो भाष्येऽभिहित । तथाहि—'यञञोश्च' (२-४-६४) इत्यत्र 'यस्कादिभ्यो गोत्रे' (२-४-६३) इत्यतो गोत्रग्रहणानुवृत्तेर्गार्ग्यस्य नापत्य-स्त्रीपत्यस्य तत्र गोत्रस्य ग्रहणादनन्तरे यञ् नदुर गोत्रमित्याश्रयणात् प्रतिकृति यदुरस्य गोत्रत्वाभावाल्लुगविषयोऽयम् । इत्थं च कृत्वा नैदस्य वैदयोर्वा अपत्यानि माणि विग्रा इत्यत्राप्यनन्तरस्य गोत्रत्वे वर्तमानत्वादनेनैव लुक् सिद्ध इति एकवचनद्विवचनान्तस्य च मतृणां यूनीत्येतद्वाग्ग्रहणमिति भाष्ये सिद्धान्तोऽवस्थापित । गार्ग्यस्य हि गोत्रस्य 'यञञोश्च' (२-४-६४) इत्यत्र ग्रहणात् युनापि गोत्रमिति । गतमेतत् ॥ ६०५ ॥

इदानीमुपमानप्रसङ्गेन 'समासाच्च तद्विषयात्' (५-३-१०६) इत्ययमिवार्थविषयश्छ विधिर्निरूप्यते । तत्र 'तद्विषयता तु प्रतिनिर्दिश्यते' इति भाष्यम् । तत्रनाग्ना प्रधानतया समुदित । समासप्रधानाप्रधान, प्रत्ययप्रकृतिनिचय गुणभावादिनाथाऽपि छविधौ गुण भावादप्रधानं इत्यवयवस्यासम्भवात् कस्य परामर्श इति प्रश्न । अत्रोत्तर छप्रत्यय इति । स एव हि विधेयत्वात् प्रधान सर्वनामसम्बन्धयोग्य इत्याशय । अत एवोक्तम्—'कथं समासो नाम छविषय स्यादि' ति । भवेत् प्राधान्या उभयपरस्य परामर्श तन्निवर्थस्यागतिरिति । यथाहि छप्रत्ययो विषयो यस्य तस्मात् समासाच्छप्रत्ययो भवतीत्यर्थ सम्पद्यते । समासस्य कथं छप्रत्ययो विषय स्यात् । न हि शब्द शब्दस्य विषयो भवति । अर्थ एव हि शब्द स्याभिधेयो विषयो न्याय्य । शब्दस्त्वनुकरणस्य प्रत्ययो भवेद् विषय । न च समास छस्यानुकरण, स एव हि यथा स्यात् । अथाप्रधानमाश्रय — अत एवमासा विषयार्थ इति छप्रत्ययादन्यत्र यस्य समासस्याभाव, स छविषय समास इति । एतदुक्तमित्याह—

छापेक्षा तद्विषयता विधेयत्वान्न गम्यते ।
काकतालीयमित्यत्र प्रसिद्धं ह्युपलक्षणम् ॥ ६०६ ॥

य समासश्छप्रत्ययादन्यत्र न भवति, स तद्वो भवतीत्येव छप्रत्ययापेक्ष समासस्य तद्विषयत्व न घटते । काकतालीयमित्यत्र व्युत्पाद्यते । यस्माद् यन्निर्ज्ञात, तदन्यस्य ज्ञप्तिहेतुरुपपद्यते । छप्रत्ययोऽनेनैवेदंप्रथमतया विधेय इत्यप्रसिद्धममुमुपाश्रित्य विशेषण कथमेतद्विषयतया प्रवृत्तिभूत. समासोऽवच्छेत्तु पार्यते । यदि हि छप्रत्ययो लक्षणान्तरेण स्वभावस्वरूपो भवेत्, तदा तत्र नियतत्व प्रकृतेः समासस्यावधार्यं प्रत्ययविध्यर्थमुपादान युज्यते । न तु लक्षणान्तरेण छो विहितः । इदमेव ह्युत्पत्तिनास्यमस्य । तथाच प्राक् छविधे समासस्य छविषयत्वमसिद्ध कथमनूद्यते । अथ भाव्यवस्थाश्रयेण छविषयत्व समर्थ्यते, तदा

१ 'नमित्य', २ 'स छस्या' क पाठ ३ 'ये य' ग पाठ

किमनेनोक्तेन । यस्मात् समासाच्छो विधास्यते, स चेच्छविषयो भवति, तस्माच्छप्रत्ययो भवतीत्येवमर्थे विज्ञायमाने न कश्चित् प्रकृतेरुपकारोऽभिहितो भवति । छप्रकृतेः समासस्य छविषयत्वाद्व्यभिचाराद्व्यवच्छेद्यस्य विशेषणविषयस्य सिद्धस्याभावात् ॥ ६०६ ॥

ननु च भाव्यवस्थाश्रयेण विशेषणस्यास्ति प्रयोजनम् । तथाहि— छविषयत्वेन समासस्य विशेषणे विषयार्थस्यानन्यप्रभावरूपत्वाच्छप्रत्ययस्य साधुत्वज्ञापनार्थः समासस्यास्य स्थापितो भवतीत्याशङ्क्याह —

राजाश्वादिश्च विषयः स्यादन्यो वेत्यनिश्चितम् ।
तेन छस्य विधानात् प्राग् व्यपदेशो न विद्यते ॥ ६०७ ॥

तद्विषयादित्यनेन छविषयः समासोऽविशेषेणोपादीयमानः सर्वो राजाश्वादि प्रसिद्धो विधास्यमानः छप्रकृतित्वादेव छविषयोऽन्यो वा प्रकारान्तरेण सम्भाव्यमानश्छविषयो गृह्येतेत्येतावन्नावधारितम् । येन प्रसिद्धस्य निश्चितच्छविषयत्वप्रणालिकया साधुत्वं ज्ञाप्येत । समासस्य प्रकारान्तरेण हि छविषयत्वानुपपत्तेश्छप्रत्ययप्रकृतित्वादेव समासस्य तद्विषयत्वम् । इत्थञ्च सर्वस्यैव समासस्य प्रकृतित्वोपपत्तौ किमनेन विशेषणेन व्यवच्छिद्येत । न च सर्वस्य समासस्य छप्रत्ययादन्यत्रासाधुत्वमेव ज्ञाप्यते । अनिष्टेः । न चानिष्टार्था शास्त्रप्रक्लृप्तिर्न्याय्या । तदित्यस्य तु परामर्शनीयमन्यत् कल्प्यताम् । तस्माच्छविधेः पूर्वं नियतस्य समासस्य प्रसिद्धतद्विषयस्याभावाच्छविषयादिति विशेषणं न युक्तम् । सिद्धे हि प्रत्यये कार्यान्तरे तेन विशेषणं प्रकृतिरूपस्य दृष्टम् । तद्यथा— 'षष्ठ्यतसर्थप्रत्ययेन (२-३-३०) इति । न तु स्वयमलब्धात्मलाभः स्वनिमित्तस्यैव विशेषणं युक्तम् । स्वज्ञानेनान्यधीहेतुः सिद्धे ह्यर्थे ज्ञापको' भवति । तदेवं प्रधानप्रत्ययप्रमर्शासम्भवे सर्वनाम्ना छविधौ निमित्तभूतः प्रत्ययार्थो गुणभूतोऽपि प्रत्यवमृश्यते इवार्थः । सोऽपि ह्यत्र प्रकृतत्वात् संनिहित इत्युक्तम् । एवं तर्हि इवार्थः प्रतिनिर्दिश्यत इति इवार्थश्चात्र प्रत्ययवाच्य इति कथं प्रकृतिभूतः समासस्तद्विषयः स्यादिति सर्वनामप्रत्यवमर्शसामर्थ्यादिवार्थस्यात्र द्वौ व्यापारौ सम्पद्येते । तेनैकेन व्यापारेणेवार्थः समासस्यावच्छेदकोऽपरेण प्रत्ययवाच्यो जायते । इवार्थविषयात् समासादिवार्थे छ इत्यर्थः । अत्रैतमभिप्रायं बुद्ध्वा चोदितम् — 'समासेनोक्तार्थत्वात् तद्धितो न प्राप्नोती'ति । एकस्यैवार्थस्य

१. 'यते । न' घ. पाठः. २. 'नानि' घ. पाठः. ३. 'षत्वादि' ङ. पाठः. ४. 'प्रत्य' ग. घ. पाठः.

व्यापारभेदाभावात् समासविशेषणत्वे समासवाच्यत्वाच्छप्रत्ययो न स्यात् । न ह्यभिधानमन्तरेण समासस्य विषयमानमुपगन्तुमर्हतीवार्थ इत्यर्थः । अथ वचनादभिहितेऽपीवार्थे प्रत्ययो, यथा तद्धितार्थे द्विगुरिति वचनाद् द्विगुतद्धितयोः साधारणोऽर्थः, तत्र शस्त्रीश्यामादेरपि समासादिवार्थाभिधायकाच्छप्रत्ययः स्यात्। अत्र परिहारोऽभिहितो 'द्वाविवार्थाविति' । सर्वनामप्रत्यवमर्शान्यथानुपपत्त्या व्यापारभेद इवार्थस्येत्यभिप्रायः पूर्वमेव निर्णीत ॥ ६०७ ॥

कौ द्वाविवार्थावित्याह—

द्वयोरिवार्थयोरर्थनिमित्तत्वं प्रतीयते ।
एकेनान्वयिनो युक्तः प्रत्ययोऽन्येन युज्यते ॥ ६०८ ॥

काकतालीयम्, अजाकृपाणीयम् इत्यत्र द्वाविवार्थौ गम्येते । तयोरेकेन समासैकदेशः पूर्वपदमुत्तरपदं च सम्बद्धमिति तमिवार्थं प्रत्याययन् समासो भवतीवार्थविषयः । तद्धितान्तशब्दापेक्षया वा प्रकृतिभूतः समास एवात्रावयवः । सोऽपि च स्वावयवद्वारेणेवार्थेन युज्यते । न तु साक्षाद् अपरेणेवार्थेन वाच्येन छप्रत्ययः सम्बध्यते । शस्त्रीश्यामेत्यत्र पुनः प्रसिद्धश्यामगुणया यथा शस्त्र्या देवदत्ता उपमीयते, तथान्यापीति देवदत्ताख्येनोपमेयेनोपमानस्याप्रयोजनत्वाद् एक इवार्थः ॥ ६०८ ॥

तत्र येनेवार्थेनावयवा युज्यते, तमाह—

चित्रस्य तत्रागमनं काकस्यागमनं यथा ।
दस्योरभिनिपातस्तु तालस्य पतनं यथा ॥ ६०९ ॥

काकतालीयमित्यत्र काकस्यागमनमुपमानं, चैत्रागमनमुपमेयम् । तथा तालपतनमुपमानं दस्युसमागमः पुनरुपमेयः । अतश्चित्रोपमानयोरुभयत्रापि समानो धर्मः । तदेव समासवाच्य इत्यर्थः ॥ ६०९ ॥

प्रत्ययार्थमप्याह—

संनिपाते तयोर्यान्या क्रिया तत्रोपजायते ।
वधादिरुपमेयेऽर्थे तया छविधिरिष्यते ॥ ६१० ॥

काकतालयोः समागमे सति या अपरा तत्समागमनिमित्ता वधोऽङ्गभङ्गः स्फोट इत्यादिका क्रिया जायते, तया च उपमेयः परिच्छेद्यश्चैत्रवधादिलक्षणोऽर्थस्तत्रोपमानोपमेयसम्बद्धे द्वितीये इवार्थे वाच्ये सूत्रेण छप्रत्ययो विधीयते ॥६१०॥

ननु च काकागमनेन[1] चैनागमनं वाच्यमुपमीयत इति तं प्रति तस्य गुणभावः । तालपतनेन च दस्युरागमनम् उपमीयत इति तत्र तस्य गुणभावः । ततश्च काकतालयोरन्योन्यसम्बन्धाभावादसति सामर्थ्ये समासः कथम् । अत एव छविधिना ज्ञापकेनात्र समासो भाष्येऽनस्थापित इति चेत्, तथापि 'सुप् सुपा'इत्यस्यैव व्यापारो भाष्ये गमित इति कथमसामर्थ्ये तत्प्रवृत्तिः । भवतु वा समासः । नित्यसमन्विताभ्यामवयवार्थाभ्यां समुदायार्थस्यानुपजननात् केन प्रकृत्यर्थेन प्रत्ययार्थो विशेष्येतेत्याशङ्कयाह —

क्रियायां समवेतायां द्रव्यशब्दोऽवतिष्ठते ।
पातागमनयोः काकतालशब्दौ तथा स्थितौ ॥ ६११ ॥

दध्योदनो गुडधाना इत्यादौ यथा द्रव्याणां सिद्धस्वभावानां परस्परसम्बन्धाभावात् तदन्यथानुपपत्त्योपसेकादिक्रियायामात्माश्रितायां द्रव्यशब्दो दध्यादिर्वर्तते, तथात्र काकतालशब्दौ स्वसमवेते व्यापारे वर्तेते । ततश्च काकागमनं काकशब्दवाच्यं, तालपतनं तालशब्दवाच्यमित्यस्ति परस्परमभिसम्बन्धः । प्रतिपादिता च ब्राह्मणवर्धीत इत्यादौ ब्राह्मणादेरन्यत्र द्रव्यशब्दस्यापि क्रियायां वृत्तिविषये वृत्तिः । ततश्चायमत्रार्थः — काकागमनमिवातर्कितोपसम्प्राप्तमिदं तालपतनं, तालपतनमिव चातर्कितोपसम्प्राप्तमिदं काकागमनमिति परस्परोपमानेन पूर्वोत्तरपदार्थयोः समन्वयोपपत्तौ प्रत्ययार्थविशेषणतोपपत्तिः । काकागमनतालपतनयोर्हि समन्वयोपपत्तौ ताभ्यां देवदत्तागमनदस्युनिपातयोरुपमेयत्वात् तत्रैवार्थे वाच्ये समासस्योपपत्तौ तद्वधात् देवदत्तवधे उपमेये छप्रत्ययप्रवृत्तिः ॥ ६११ ॥

ननु चोपनत एकाकितोपनतेन तालपतनेन काकवधादिना देवदत्तवधादिर्दस्युकृत किमिति नोपमीयते । तथाहि काकागमनतालपतनयोर्गौण्या वृत्त्या काकतालशब्दयोरत्र वृत्तिः परिकल्पयितुं नोपयुज्यत इति किं काकागमनतालपतनयोरत्रान्योन्योपमानेनेत्यत आह —

यदन्वाख्यायकं वाक्यं तदेवं परिकल्प्यते ।
प्रयोगवाक्यं यल्लोके तदेवं न प्रयुज्यते ॥ ६१२ ॥

इह प्रकृतिप्रत्ययविभागकल्पनेनान्वाख्यानमिति प्रक्रियावाक्यमनेन प्रकारेण समन्वितार्थपदं सम्पाद्यते । काकागमनमिव तालपतनं तालपतनमिव काकागमनमित्यन्योन्योपमानेन हि प्रक्रियायाम् अन्वाख्यानोपायभूतमिदं वाक्यं, न त्वेतल्लोके प्रयुज्यते । अन्यथा वधेन तालकर्तृकेण काकः सम्बध्येत, न तालेन, यदि नेदमुपकल्प्येत प्रक्रियावाक्यम् । स्थितलक्षणार्थप्रत्यायकं तु प्रयोगवाक्यं लौकिकं नैयम्भूतम् । नहि छप्रत्ययमन्तरेण काकतालशब्दो वाक्यस्वभावो लोके प्रयु-

1. 'नेति', २ 'शर', ३ 'स्न', ४. 'त, व' प. पाठः.

ज्यते । केवलं काकतालीयमित्यस्य लौकिकस्य शब्दस्यान्वाख्यानोपायपरिकल्पनेयम् । यथासमन्वयं हि परिकल्पनमित्यनुगुणतरोऽयमुपायः ॥ ६१२ ॥

तदाह—

यथोरतर्किता प्राप्तिर्दृश्यते काकतालवत् ।
तयोः समासप्रकृतेर्वृत्तिरभ्युपगम्यते ॥ ६१३ ॥

यथा काकतालयोरनाशङ्कितोपस्थितयोर्वधादिनिमित्तः सम्बन्धस्तथा ययोर्दस्युदेवदत्तयोर्दृश्यते, तयोः सम्बन्धोपाधिकयोस्तत्समागम इत्याख्ये समासलक्षणा या प्रवृत्तिस्तस्याः सकाशाच्छस्य प्रत्ययस्य वृत्तिः प्रतिज्ञायते । तदेव काकतालद्वयसम्बन्धोपाधि प्रकृत्यर्थो निर्भज्यते । उपमेये ॥ यथार्थो छस्तत्र तद्विपरेन च नियमेनेयं प्रवृत्तिरित्यन्यत्राप्यां साधुत्वामाव । इदमेव च वस्तु भाष्ये विस्तरेण प्रदर्शितम् ॥ ६१३ ॥

कस्मिंश्च वृत्तिरभ्युपगम्यत इत्याह—

काकस्य तालेन यथा वधो यस्य तु दस्युना ।
तत्र चित्रीकृतेऽन्यस्मिन्नुपमेये छ इष्यते ॥ ६१४ ॥

काकतालसमागमसमो दस्युदेवदत्तसमागम एव समासार्थ इत्यर्थः पूर्वं दर्शित । अथ त्वपर प्रत्ययवाच्योऽत्र प्रदर्श्यते यदिहान्यत्किञ्चिदिति । यथा यदृच्छयोपरि निपतता तालेन यदृच्छागतस्य काकस्य वधो दस्त्वनाशङ्कितोपनिपतता दस्युना असम्प्रधारितोपस्थितस्य देवदत्तस्य वध इत्येनमद्भुतरूपता मासे परिच्छेद्येऽर्थे छप्रत्यय । काकतालसम्प्राप्तिनिमित्तोपजनितक्रियाविशेषोपमितेऽन्यस्मिन् क्रियाविशेषे छविधिरित्यर्थः । तेन यथा तालेन काको यदृच्छया हत तथा यदपरमसमीहितमाश्चर्यभूतं जायते, तत् काकतालीयमुच्यत इत्यर्थः । गतमेतत् ॥ ६१४ ॥

उपमानपक्षे तद्धितार्थप्रस्तावे ... विधिरन्यस्यापि विचार्यते । तथाहि— ... प्रकारवचने थाल् (५ । ४ । ३) इत्यत्र भाष्ये प्रकारार्थ ... । तत्र ... इत्युक्तम् । ... तन्मतमाह —

चञ्चत्प्रकारश्चञ्चत्को बृहत्क इति चापरे ।
मणिमण्डूकसर्पोतान् सादृश्येन प्रचक्षते ॥ ६१५ ॥

प्रकारोऽत्र सादृश्यमिति चञ्चत्प्रकारो बृहत्प्रकारश्चञ्चत्को बृहत्क इति मणिप्रभृतीनामन्यतमस्याभिधानमाचार्या मन्यन्ते । अपर इत्याचार्याणामभिन्नमतानां निर्देश ॥ ६१५ ॥

१ 'च' ग प पाठ

खद्योतवत् मण्यादिसादृश्यमित्याह—

तन्नोन्मेषनिमेषाभ्यां खद्योत उपमीयते ।
श्वासप्रबन्धैर्मण्डूकः स्पन्दमानप्रभो मणिः ॥ ६१६ ॥

अचलन्नपि खद्योतः स्वप्रभाच्छुरितश्चलन्निवावधार्यमाणश्चञ्चरीकशब्द-वाच्यः । तथाहि— स्वप्रभोन्मीलननिमीलनक्रियाभेदात् स्पन्दमान इव लक्ष्यते । तथानवरतप्रवर्तमानोच्छ्वासवशोच्छूनशरीरतया चलितशरीर इवावधार्यमाणो भेकाभिधानविषयभावमुपैति । एवमविच्छिन्नोद्गमदीप्यमानरश्मिचक्रवालचलित-मूर्तिरिव मणिश्चञ्चरकः ॥ ६१६ ॥

बृहत्के च प्रकारार्थ इत्याह—

प्रविकासिप्रभोऽल्पोऽपि महान् य उपलभ्यते ।
बृहत्क इति तत्रापि मणौ शब्दः प्रयुज्यते ॥ ६१७ ॥

परिकृशोऽपि मणिः सर्वतः प्रसर्पिप्रभाजालवशेन स्थूलतरमूर्तिरवधार्य-माणो बृहत्सदृशो बृहत्क इत्यभिधीयते ॥ ६१७ ॥

प्रसङ्गेन प्रकारस्वरूपं दर्शनभेदेन विचारयति—

सादृश्यमेव सर्वत्र प्रकारः कैश्चिदिष्यते ।
भेदेऽपि तु प्रकाराख्या कैश्चिदभ्युपगम्यते ॥ ६१८ ॥

'प्रकारवचने थाल्' (५-३-२३) 'प्रकारे गुणवचनस्य' (८-१-१२) 'स्थू-लादिभ्यः प्रकारवचने कन्' (५-४-३) इत्यादौ सर्वत्र शास्त्रे सादृश्यमेव प्रकारश-ब्दार्थः । तथाहि— यथा तथेति तुल्यत्वमेव द्योत्यते । पटुजातीय इति तु जातीयरा सदृशः प्राधान्येनाभिधीयते । पटुपटुरिति द्विर्वचनेन सादृश्यमेव तद्वति गुणभूतं द्योत्यते । एवं स्थूलप्रकारः स्थूलक इति । कैश्चित् तु भेदेऽपि प्रकाराख्येष्यते । अत्रापि सर्वत्रेति यथा तथेति भेद एव वाच्यः । स एव समानः सादृश्यहेतु-रिति तदप्यर्थाद् गम्यते । एवं पटुपटुः स्थूलक इत्यत्रापि । इत्थञ्च भेदसा-दृश्ययोः सर्वत्र प्रतीतावेकोऽभिधेयोऽपरः सामर्थ्यगम्य इति मतभेदेन प्रकारो विभज्यते । पशुप्रकारो देवदत्त इत्यत्र सामान्यविशेषभावायोगात् सामान्यमेव प्रकारः । तद्भेदेऽपि पशुर्देवदत्त इत्यभेदाभिधानात् प्रार्थात् तद्धेतु सादृश्यमेव गम्यते । न तु प्रयोगद्वयेऽप्यत्र भेदोऽवगम्यते । ब्राह्मणप्रकारा माठरादय इति तु सामान्यस्य विशेषेऽन्वयाद् भेदेनापनीते सादृश्यासम्भवे भेदः प्रकार इत्याहुः ॥ ६१८ ॥

अस्तु सादृश्यं भेदो वा प्रकारः । इदं तु विचार्यते—किंजातीय इत्यत्र प्रकारवचने विधीयमानस्थाल् प्रातिपदिकसामान्याद् विहितस्य जातीयरो बाधकः । तथा च किंजातीय इति न सिध्येत् । प्रकारस्य च थालैवाभिव्यक्तौ तथाजातीय इति कथं प्रयोग इत्यत आह—

प्रकारवचनः कश्चित् प्रकारजाति संस्थितः ।
प्रकारमात्रे वर्तित्वा कश्चित् तद्व्यतिवर्तते ॥ ६१९ ॥

कश्चिदिति जातीयर् कश्च प्रत्ययो द्विर्वचनं च । अत्र हि प्रत्यये स्वभावाद् गुणभूतस्य प्रकारस्याभिधानमिति प्रकारवानेव प्राधान्येनोच्यते । अत एव प्रकार उच्यते यस्मिन् स प्रकारवचनस्तस्मिन् प्रातिपदिकादयं प्रत्यय इति प्रकारवति भवति । थाल् पुनः प्रकारमात्र एव, न तद्वति । किन्तु प्रकारे वृत्तिमनुभूय तद्वति जातीयर्सहितो वर्तते इति सामर्थ्याद्वसेयम् । न तु शुक्लादिवत् तद्वति वृत्तिस्थालन्तस्येह दृश्यते । एवञ्च भिन्नविषयत्वाद् बाध्यबाधकभावश्च न भवति । तथाजातीय इति च प्रयोगो भवति । यथा देवदत्तस्तथा यज्ञदत्त इत्यत्रापि न थालन्त एव प्रकारवन्तमभिधत्ते, अपि तु क्रियापेक्षायां वाक्यस्यास्य परिसमाप्तेर्वर्तते दृश्यते चेत्यादिका यासावपेक्षिता क्रिया, तत्र करणभावमापन्नः प्रकार एव प्रतीयते । येन प्रकारेण देवदत्तो वर्तते, तेन प्रकारेण यज्ञदत्तोऽपीत्यर्थः । अतश्च क्रियया सम्बध्यमानः करणतयात्र प्रकारः प्रकारवति षष्ठीनिमित्तं व्यतिरेकं नापादयति । न तु तद्वदभिधानं षष्ठ्यभावादनुमेयम्, अन्यथासिद्धे[1] षष्ठ्यभावस्य ॥ ६१९ ॥

यदि तर्हि यथा सादृश्य प्रकारार्थस्तदा यथार्थेऽव्ययीभावमुक्त्वा किमर्थं पुनः सादृश्येऽव्ययीभाव इत्याह—

सादृश्यग्रहणं सूत्रे सदृशस्योपलक्षणम् ।
तुल्ययोगव्ययीभावे सहशब्दोऽभिधायकः ॥ ६२० ॥
वीप्सासादृश्ययोर्वृत्तिर्या यथार्थाभिधायिनः ।
स चायमव्ययीभावे भेदो भेदेन दर्शितः ॥ ६२१ ॥

'अव्ययं विभक्ति—' [1](२-१-६) इत्यादौ सूत्रे सादृश्यग्रहणेन धर्मी सदृशो लक्ष्यते । धर्मो ह्यव्यभिचारात् स्वाश्रयमुपलक्षयितुं पर्याप्त एव । तथा च सदृशः सख्या ससखीति सदृशयोगव्ययीभावे सहशब्दो वाचको न सादृश्यमात्रस्येति सामर्थ्यादत्र सूत्रे धर्मिणो धर्मः सदृशस्योपलक्षणम् । वृत्तिकारैर्हि

1. 'दि स्वभावे प्र' क पाठः

पूर्वैरुदाहरणमिदमत्रोक्तमिति तदाश्रयेण सहशब्दोऽभिधायको वाचकः सदृशाख्यस्य धर्मिण उच्यते । एवञ्च यदव्ययमभिधायकं सदृशार्थस्य, तस्य सादृश्य-ग्रहणेन समासः कथ्यते । सत्त्वभूतार्थाभिधायित्वेऽपि चास्य वचनाद् 'अव्ययीभावश्च' (१-१-४१) इत्यस्मादव्ययत्वं, यथा स्वरादीनाम् । यत् पुनरव्ययं यथार्थाभिधायि समासभावत्वेन निर्दिष्टं, तस्य वीप्सायां सादृश्ये च वृत्तिर्धर्ममात्रे न धर्मिणि । प्रत्यर्थम् अनुरूपमिति । 'यथासादृश्य' (२-१-७)इति प्रतिषेधाद् यथाशब्दः सादृश्यवचनो न समस्यते । थाल्प्रत्ययप्रतिरूपको वा यथाशब्दो वीप्सावचनो निपातः समस्यत एव । वीप्सा च यथार्थो भेदः । तथाहि प्रत्यर्थ-मित्यत्रार्थसामान्यस्य क्रियाया व्याप्यमानताविशेषः प्रतिना प्रकाश्यत इति साकल्येन पदार्थानां क्रियया समन्वयो वीप्सासामान्यस्य भेदको विशेषः प्रकारो भवति यथार्थः । तदेवं यथार्थे सादृश्यमात्रेऽव्ययीभावः स्यादिति तद्वृत्ति सादृश्यग्रहणेन पुनर्विधीयत इत्ययं विशेषः पृथक् प्रणयनादेव धर्मधर्मिणोरत्राभिमतः ॥ ६२०,६२१ ॥

प्रकारान्तरमन्त्रवाह —

साद्दश्यं योग्यता कैश्चिदनावभ्युपगम्यते ।
यत् तु मूर्तिगतं साम्यं तत् सहेनाभिधीयते ॥ ६२२ ॥

अनायनुशब्दविषये या योग्यता तेनानुशब्देन द्योत्या, तदेव सादृश्यं यथार्थ इति समासस्तत्र । अनुरूपं सुरूपो वहतीति । रूपेण तुल्यं हारकटकादिना येनोऽन्यो वा कश्चिच्छोभातिशयहेतुत्वात् तं सुरूपो धारयतीत्यर्थः । इत्थञ्च कृत्वात्र गुणस्य रूपस्य सादृश्ये यथार्थेऽव्ययीभावः । योग्यतालक्षणो हि यथार्थः सादृश्यमात्रगुणविषयः । यत्तु मूर्तिगतं वस्तुनियमवयवसंनिवेशा-दिना सादृश्यं द्रव्यविषयं, तत् सकिर्त्तीत्यत्र सहशब्देनाम्नायते । तथाहि सादृश्यं किरया सकिंचि न तु सदृश इति । एवं द्रव्यगतत्वेन भिन्नं सादृश्यं सूत्रे सादृश्यशब्देनोपादीयते, यथाशब्देन तु योग्यताख्यं गुणगतत्वेनेति भिन्न-विषयत्वेन समासयोः । यदा तु योग्यता वीप्सा सादृश्यं च यथार्थ इति भेदेन निर्देशादनुरूपं सुरूपो वहतीत्यत्र सादृश्यादन्यैव योग्यतानुशब्दार्थो यथायं रूपस्य शोभाकारित्वेन यदुचितं तदनुरूपमिति, तदा पूर्व एव धर्मधर्मिभेदः पृथगुपादाने हेतुर्वाच्यः ॥ ६२२ ॥

१. 'क्रियाय' प. पाठः. २. 'दशात्माय', ३. 'च' क. पाठ.

सादृश्यमेव यत्र प्रकार इति यदुक्तं, तद्व्याचष्टे । तथाहि यथाऽऽर्द्रं कमण्डलुना स्नानमित्यत्र मनुष्यतासामान्यस्य छायाभिन्नाऽपि ह्या भेदोऽस्य प्रकारो न सादृश्यम्, अपरस्य भेदताऽनपगमान्वितस्य समर्थयितुमाह —

**इत्थंभावेऽपि सादृश्यं बुद्ध्यवस्थानिबन्धनम् ।**
**ग्रहणे भेदमात्रस्य तत्रान्यैनाभिधीयते ॥ ६२३ ॥**

अक्ष्णी कुण्डलीत्यादिना पूर्वमीदृशो देवदत्त इति बुद्धिप्रकल्पितसादृश्योपादानादत्रापीदृग्भावे ग्रहणे प्रत्यये भेदमात्रा कथ्यते । आर्द्रवस्तुन उपरागाद् भेदलेशो न तत्त्वतो भेदः । ततश्च ज्ञानानुसारो बहिरर्थस्य व्यवस्थापकत्वात् प्रकार इति सादृश्यमप्यत्र प्रकार उपपद्यते । एवं पञ्चधा भुङ्क्ते, नेधा धीते, इत्यादावपि 'सङ्ख्याया विधार्थे धा'(५-३-४२)इति प्रत्ययनिर्भासस्य प्रकारानुसारित्वेन सादृश्य प्रकारार्थे उपपाद्य । मङ्क्षिप्तमेव स्वरूपस्य क्रियाविशेषस्य हि निर्वर्तनमत्र ॥ ६२३ ॥

तदेवमन्यत्राप्युदाहृत्य गौर्वाहीक इत्यादावुदाहरणे गौरयं गौरयं प्रकाराथे सादृश्यमित्यत्र भाष्यकारमतं दर्शयन्नाह—

**गौर्वाहीक इति द्विरुक्ते सादृश्यं प्रत्युदाहृतम् ।**
**शुक्लादौ सति निष्पन्ने वाहीको न द्विरुच्यते ॥ ६२४ ॥ इति ॥**

'प्रकारे गुणवचनस्य' (८-१-१२) इत्यत्र द्विर्वचनविधौ गुणवचनग्रहणस्य प्रत्युदाहरणम् — 'अग्निर्माणवकः गौर्वाहीकः' इति भाष्येऽभिहितम् । यदि च प्रकारः सादृश्यं, तदा एतदुपपद्यते । गोसादृश्याद्धि वाहीको गौः । अग्निसादृश्याच्च माणवकोऽग्निः । न तु सामान्यस्य गोत्वस्याग्नित्वस्य चात्र विशेषो भेदः । तदनेन द्विर्वचनविधेरन्यत्रापि प्रकारः सादृश्यमिति सूचितं भवति । द्विर्वचनाभावेऽपि तस्यात्र प्रदर्शनात् । ननु च शुक्लादिशब्दो गुणनिमित्तमेवाभ्यन्तरसायादेव वाहीकादौ प्रयुक्त इति कथं न गुणवचन इत्याशङ्क्याह—शुक्लादौ सति निष्पन्ने वाहीको न द्विरुच्यत इति । परिसमाप्तरूपगुणवचने शुक्लादौ प्रसिद्धे सम्भवति वाहीको वाहीकाभिधायी गोशब्दो न द्विःप्रयुज्यत इत्यर्थः । इतिशब्दः समाप्तौ । शुक्लादिशब्दो हि गुणे रूढः सन् समारोपितगुणसम्बन्धे वर्तमानो गुणवचन एव । गोशब्दस्तु वाहीक एव तथा, न जातौ । अत एव गुणमुक्तवान् गुणवचन इत्यभिधीयते । गोशब्दस्तु वाहीके वर्तमानो नैव गुणमुक्तवान्, पूर्वं जातौ प्रवृत्तेः । इत्थञ्च कृत्वा प्रकृत्यर्थविशेषणत्वात् सिद्धमित्युक्तम् ।

* 'ना गु' क पाठ.

पूर्वैरुदाहरणमिदमत्रोक्तमिति तदाश्रयेण सहशब्दोऽभिधायको वाचकः सदृशाख्यस्य धर्मिण उच्यते । एवञ्च यदव्ययमभिधायकं सदृशार्थस्य, तस्य सादृश्य-ग्रहणेन समासः कथ्यते । सत्त्वभूतार्थाभिधायित्वेऽपि चास्य वचनाद् 'अव्ययीभावश्च' (१-१-४१) इत्यसादव्ययत्वं, यथा स्वरादीनाम् । यत् पुनरव्यय यथार्थाभिधायि समासभावत्वेन निर्दिष्टं, तस्य वीप्सायां सादृश्ये च वृत्तिर्धर्ममात्रे न धर्मिणि । प्रत्यर्थम् अनुरूपमिति । 'यथासादृश्ये' (२-१-७)इति प्रतिषेधाद् यथाशब्दः सादृश्यवचनो न समस्यते । थाल्न्तप्रतिरूपको या यथाशब्दो वीप्सावचनो निपातः समस्यत एव । वीप्सा च यथार्थो भेदः । तथाहि प्रत्यर्थ-मित्यत्रार्थसामान्यस्य क्रियाया व्याप्यमानताविशेषः मतिना प्रकाश्यत इति साकल्येन पदार्थाना क्रियया समन्वयो वीप्सासामान्यस्य भेदको विशेषः प्रकारो भवति यथार्थः । तदेवं यथार्थे सादृश्यमात्रेऽव्ययीभावः स्यादिति तद्वृति सादृश्यग्रहणेन पुनर्विधीयत इत्यय विशेषः पृथक् प्रणयनादेव धर्मधर्मिणोरत्राभिमतः ॥ ६२०,६२१ ॥

प्रकारान्तरमेवाह —

> सादृश्यं योग्यता कैश्चिदनावभ्युपगम्यते ।
> यत् तु मूर्तिगतं साम्यं तत् सहेनाभिधीयते ॥ ६२२ ॥

अनावनुशब्दविषये या योग्यता तेनानुशब्देन द्योत्या, तदेव सादृश्य यथार्थ इति समासस्तत्र । अनुरूपं सुरूपो वहतीति । रूपेण तुल्यं हारकटका-दिना वेषोऽन्यो वा कश्चिच्छोभातिशयहेतुत्वात् तं सुरूपो धारयतीत्यर्थः । इत्थञ्च कृत्वात्र गुणस्य रूपस्य सादृश्ये यथार्थेऽव्ययीभावः । योग्यतालक्षणो हि यथार्थः सादृश्यमात्रगुणविषयः । यत्तु मूर्तिगतं वस्तुनिष्ठमवयवसंनिवेशा-दिना सादृश्यं द्रव्यविषयं, तत् सकिमीलन सहशब्देनाख्यायते । तथाहि सादृश्यं निरस्या सकिस्ति न तु सदृश इति । एव द्रव्यगतत्वेन भिन्न सादृश्य-मत्रे सादृश्यशब्देनोपादीयते, यथाशब्देन तु योग्यताख्यं गुणगतत्वेनेति भिन्न-विषयत्वं समासयोः । यदा तु योग्यता वीप्सा सादृश्य च यथार्थ इति भेदेन निर्देशादनुरूपं सुरूपो वहतीत्यत्र सादृश्यातिरेकेण योग्यतानुशब्दार्थो यथास्वं रूपस्य शोभाकारित्वेन यदुचित तदनुरूपमिति, तदा पूर्व एव धर्मधर्मिभेदः पृथगुपादाने हेतुर्वाच्यः ॥ ६२२ ॥

१. 'क्रियायं' घ. पाठ. २. 'स्यात्मात्र', ३. 'च' ख. पाठ.

सादृश्यमेव भवति प्रकार इति चेदुच्यते, तच्चायुक्तम् । यथाहीयमाः कमण्डलवः प्रकारभिन्नाः मनुष्यत्वसामान्यस्य कार्यनिरोधः इति प्रकारे प्रकारे न सादृश्यम्, अपरस्य भेदस्यानपेक्षत्वात् तत्र समर्थयितुमाह —

इत्थंभावेऽपि सादृश्यं बुद्ध्यवस्थानिबन्धनम् ।
ग्रहणे भेदमात्रस्य तत्रान्येनाभिधीयते ॥ ६२३ ॥

नक्षत्री कुण्डलीत्यादिना पूर्वमदृष्टो देवदत्त इति बुद्धिप्रकल्पितसादृश्योपादानादवार्थेत्थंभावे ग्रहणे प्रत्यये भेदमात्रा उच्यते । वास्तवस्तु उपगमात् भेदांशो न तत्रत्यो भेदः । ततश्च ज्ञानानुसारी बहिर्र्थस्य व्यवस्थापकः ज्ञानप्रकार इति सादृश्यमप्यत्र प्रकार उपपद्यते । एवं पटुतया क्षुद्रत्वं, देवाधीते, इत्यादावपि 'संख्याया विधार्थे धा'(५-३-४२)इति ग्रहणनिर्भासस्य सादृश्यानुगरित्वेन सादृश्य प्रकारार्थे उपपाद्य । सङ्कल्पितभेदग्रहणस्य क्रियाविशेषस्य हि निर्वर्तनमत्र ॥ ६२३ ॥

तत्प्रकाशकत्वादाह भाष्ये इत्यादिग्रन्थोदाहरणस्य गवेषणीयत्वात् सादृश्यार्थे सादृश्यविषयस्य भाष्यकारमतं प्रकाशयति —

गौर्वाहीक इति ह्येवं सादृश्यं प्रत्युदाहृतम् ।
शुक्लादौ सति निष्पन्ने वाहीको न द्विरुच्यते ॥ ६२४ ॥ इति ॥

'प्रकारे गुणवचनस्य' (८-१-१२) इत्यत्र द्विर्वचनविधौ गुणवचनग्रहणस्य प्रत्युदाहरणम् — 'अभिनिर्माणक गौर्वाहीक' इति भाष्येऽभिहितम् । यदि च प्रकार सादृश्य, ततः एतदुपपद्यते । गोसादृश्यादि वाहीको गौः । अभिसादृश्याच्च माणवकोऽग्निः । न तु सामान्यस्य गोत्वस्याग्नित्वस्य चायं विशेषो भेदः । तदनेन द्विर्वचनविधेरन्यत्रापि प्रकारः सादृश्यमिति सूचितं भवति । द्विर्वचनाभावेऽपि तस्येव प्रदर्शनात् । ननु च गवादिशब्दो गुणनिमित्तामेवाभ्यवसायादेव वाहीकादौ प्रयुक्त इति कथं न गुणवचन इत्याशङ्क्याह — शुक्लादौ सति निष्पन्ने वाहीको न द्विरुच्यत इति । परिसमाप्तस्वगुणवचने शुक्लादौ प्रसिद्धे सम्भवति वाहीको वाहीकाभिधायी गोशब्दो न द्विष्प्रयुज्यत इत्यर्थः । इतिग्रन्थसमाप्तौ । शुक्लादिशब्दो हि गुणे वर्तते समवायिनि गुणसम्बन्धे वर्तमानो गुणवचन एव । गोशब्दस्तु वाहीके एव तथा, न जातौ । अत एव गुणमुक्तवान् गुणवचन इत्यभिधीयते । गोशब्दस्तु वाहीके वर्तमानो न गुणमुक्तवान्, पूर्वं जातौ प्रवृत्तेः । इत्यस्य कृत्वा प्रकृत्यर्थविशेषणत्वात् सिद्धमित्युक्तम् ।

१ 'नी गु ह पाठः.

द्विर्वचनकारणत्वात् प्रकृतिर्द्विर्वचनस्यात्र स्थानी कथ्यते । तदर्थो गुणवचनस्येत्यनेन विशेष्यते, न तु प्रकारार्थः । प्रकारे हि सर्व एव गुणवचनः । तथाचाह — 'प्रकारे सर्वेषां गुणवचनत्वात् सर्वप्रसङ्ग' इति । द्रव्यवाचिनामपि गवादीनां वाहीकादौ गुणनिमित्तसादृश्यवशेन प्रवृत्तेः प्रकारे गुणवचनत्वमस्त्येवेति किं विशेषणेन व्यावर्त्येत । तस्माद् गुणवचनग्रहणसामर्थ्याद् गुणवचनो यः शब्दो निर्ज्ञातस्तस्य प्रकारे सादृश्ये द्योत्ये द्विर्वचनमिति नास्त्यतिप्रसङ्ग इति गुणोपसर्जनद्रव्यवाचिनः शुक्लादेरेव द्विर्वचनं गुणमात्रवाचिनश्चेति शुक्लशुक्लः पटः, शुक्लशुक्लं रूपं, पटुपटुः इतीष्टं सिद्धम् । तदेवं संसर्गावस्थः पदार्थो वाक्यार्थादपोद्धृत्य पदविभागपूर्वकं समीक्षित इति परिसमाप्तार्थद्वारकः पदविचार इति शुभम् ॥ ६२४ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णक-
प्रकाशे वृत्तिसमुद्देशश्चतुर्दशः ॥

समाप्तं चेदं पदकाण्डम् ।

---

मुक्तापीड इति प्रसिद्धिमगमत् कश्मीरदेशे नृपः
श्रीमान् ख्यातयशा बभूव नृपतेस्तस्य प्रभायानुगः ।
मन्त्री लक्ष्मण इत्युदारचरितस्तस्यान्वयाये भवो
हेलाराज इमं प्रकाशमकरोच्छ्रीभूतिराजात्मजः ॥ १

तमोध्वंसः सूर्योदिभिरिह कृतो यद्यपि भुवि
प्रदीपः साफल्यं क्वचिदपि तथाप्यत्र विषये ।
प्रयात्येव प्रायो जगति खलु भावाः कृतधिया
न शक्या निह्नोतुं स्फुरदभिनवस्फाररुचिराः ॥ २ ॥

निराकाङ्क्षेण वपुषा गता विश्वजनीनताम् ।
तृतीया वागवस्थेव प्रतिष्ठामुपयात्वितः ॥ ३ ॥

त्रैलोक्यगामिनी येन त्रिकाण्डी त्रिपदीकृता ।
तस्मै समस्तविद्याश्रीकान्ताय हरये नमः ॥ ४ ॥

सूक्तिश्रियः स्फुटा एता जयन्ति जगतां गुरोः ।
हरेर्भाष्याब्धिपीयूषच्छटाच्छुरितविग्रहाः ॥ ५ ॥

समाप्तोऽयं प्रकीर्णकप्रकाशः ।

---

शुभं भूयात् ॥

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| १ | ९ | 'कुत्सितादीनामर्थे—' | वार्तिकम् | वररुचिः |
| " | ९ | 'कुत्सितादि—' | " | " |
| " | ११ | 'सिद्ध तु येन—' | " | " |
| " | १७ | 'स्यार्थमभिधाय—' | भाष्यम् | पतञ्जलिः |
| " | २० | 'प्रियकुत्सनादिषु—' | " | " |
| ४ | २२ | 'अर्थरूपम्—' | " | " |
| " | २६ | 'न वा वाक्यार्थवद्—' | वार्तिकम् | वररुचिः |
| " | २८ | 'प्रातिपदिकार्थमात्रे—' | " | " |
| ५ | २ | 'विशेषणविशेष्ययो—' | " | " |
| " | ६ | 'न वान्यतरस्य—' | " | " |
| " | २२ | 'कृष्णाजिनमुल्लसस्य—' | भाष्यम् | शङ्करः |
| " | २३ | 'कृष्णाजिनेन—' | " | " |
| " | २३ | 'कृष्णविषाणया—' | " | " |
| ७ | १५ | 'कृष्णशब्द —' | भाष्यम् | पतञ्जलिः |
| ९ | ५ | 'तत्र व्यपदेशिवद्वचनम्—' | वार्तिकम् | वररुचिः |
| " | ६ | 'अवचनाल्लोक—' | " | " |
| " | ९ | 'प्रमाणविपर्यय—' | " | " |
| " | २५ | 'एकवर्णेषु च—' | " | " |
| १० | २० | 'समानाधिकरणेषु—' | " | " |
| १२ | २९ | 'अव्यतिरेकात्—' | " | " |
| १५ | ३ | 'अभिहित —' | भाष्यम् | पतञ्जलिः |
| १७ | १८ | 'चार्थे द्वन्द्ववचने—' | वार्तिकम् | वररुचिः |
| " | १९ | 'सिद्ध [illegible] युगपदधिकरणे—' | " | " |
| " | २८ | 'अव्यपौर्वापर्याद्—' | " | " |

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| १८ | ४ | 'कारणाद् द्रव्ये—' | वार्तिकम् | वररुचिः |
| ,, | ८ | 'एकेनोक्तत्वात्—' | ,, | ,, |
| ,, | १२ | 'दुःखा दुरुपपादा चेयम्' | भाष्यम् | पतञ्जलिः |
| २१ | ५ | 'तद्विषयं च' | वार्तिकम् | वररुचिः |
| ,, | २२ | 'प्रागभिसम्बन्धाद्—' | भाष्यम् | पतञ्जलिः |
| २२ | २९ | 'अस्त्यत्र विशेषः—' | ,, | ,, |
| २३ | ५ | 'उत्तरयोर्विग्रहेण—' | वार्तिकम् | वररुचिः |
| ,, | २० | 'क्रियासमभिहारे—' | भाष्यम् | पतञ्जलिः |
| २४ | २१ | 'न वा समाहारैकत्वात्—' | वार्तिकम् | वररुचिः |
| २५ | ५ | 'वावचनानर्थक्यं च—' | ,, | ,, |
| ,, | २२ | 'एकवद्वचनम्—' | ,, | ,, |
| २६ | १५ | 'सविशेषणानां—' | भाष्यम् | पतञ्जलिः |
| ,, | १६ | 'वृत्तस्य वा—' | ,, | ,, |
| २८ | १४ | 'सिद्धं तु समाना—' | वार्तिकम् | वररुचिः |
| ,, | १५ | 'षष्ठीसमासश्च—' | ,, | ,, |
| ,, | १८ | 'नवाऽसमासे—' | ,, | ,, |
| ,, | १९ | 'मुक्तार्थसम्प्रत्ययाच्च—' | ,, | ,, |
| ,, | ,, | 'सम्प्रत्ययाच्च—' | ,, | ,, |
| २९ | १८ | 'पारस्पर्यापेक्षा—' | ,, | ,, |
| ,, | २३ | 'सविशेषणानां—' | भाष्यम् | पतञ्जलिः |
| ३० | ,, | 'अर्थानादेशात्—' | ,, | ,, |
| ३२ | २१ | 'द्वन्द्वतत्पुरुषयोः—' | वार्तिकम् | वररुचिः |
| ,, | २२ | 'यदा वृत्तिः—' | भाष्यम् | पतञ्जलिः |
| ३४ | १२ | 'नवावयव—' | वार्तिकम् | वररुचिः |
| ,, | ,, | 'तस्यान्तोदात्तत्वं—' | ,, | ,, |
| ३५ | ११ | 'नवाऽनभिहितत्वात्—' | ,, | ,, |

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| ३६ | ९ | 'योऽसौ कृतकटयो –' | भाष्यम् | पतञ्जलिः |
| ३८ | ११ | 'अथ क्यजन्तस्य–' | " | " |
| " | २८ | 'क्रियासमभिहारे–' | " | " |
| ४० | ५ | 'सामान्यार्थे–' | वाक्यकाण्डम् | भर्तृहरिः |
| ४१ | " | 'शालेषु प्रक्रिया–' | " | " |
| ४२ | १९ | 'लक्ष्यलक्षणे–' | वार्तिकम् | वररुचिः |
| " | " | 'सैषा सिद्ध–' | " | " |
| " | २१ | 'तत्वानिष्ठादर्शनात्–' | " | " |
| ४३ | १३ | 'न केवला प्रकृतिः–' | भाष्यम् | पतञ्जलिः |
| ४५ | १७ | 'अव्यतिरेकात्–' | वार्तिकम् | वररुचिः |
| " | १८ | 'इष्टो व्यतिरेक –' | " | " |
| ४६ | ३ | 'नागृहीतविशेषणा–' | भाष्यम् | पतञ्जलिः |
| ४८ | २४ | 'अथ ये वृत्तिं–' | " | " |
| ४९ | १० | 'एकमाहु –' | " | " |
| " | १९ | 'अन्यायश्च–' | " | " |
| " | २१ | 'तक्षा राजकर्मणि–' | भाष्यम् | पतञ्जलिः |
| ५० | ३ | 'भिक्षुको द्वितीया–' | " | " |
| " | १२ | 'सङ्घातस्यैकार्थ्यात्–' | वार्तिकम् | वररुचिः |
| " | १५ | 'राजपुरुषमानय–' | भाष्यम् | पतञ्जलिः |
| " | १९ | 'जहदप्यसौ–' | " | " |
| ५१ | २५ | 'अथवा वृत्तौ–' | " | " |
| ५२ | १७ | 'न शब्दनिमित्तकेन–' | " | " |
| ५५ | २० | 'एकवद्भावो वक्तव्य –' | वार्तिकम् | वररुचिः |
| " | २१ | 'एकवद्वचन–' | " | " |
| " | २४ | 'एकवचनं तूत्सं–' | भाष्यम् | पतञ्जलिः |
| ५७ | ७ | 'आकृत्यभिधानाद्–' | वार्तिकम् | वररुचिः |

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| ५७ | ९ | 'जात्याख्याया–' | वार्त्तिकम् | वररुचि |
| ५८ | ६ | 'पष्ठ्यपि हि–' | भाष्यम् | पतञ्जलि. |
| " | ७ | वृत्तस्य ये–' | " | " |
| " | ११ | 'प्रागपि वृत्तेर्ये–' | " | " |
| ६० | १८ | 'अन्याभावः–' | वार्त्तिकम् | वररुचि |
| ६२ | १६ | 'यत्रादीनामेकस्य–' | " | " |
| ६३ | २१ | 'द्विवचनबहुवचना–' | " | " |
| ६५ | ६ | यो वा इमा वान–' | भाष्यम् | पतञ्जलिः |
| ६६ | १० | 'सिद्ध तु–' | वार्त्तिकम् | वररुचि |
| ६८ | ६ | 'न वा अस्त्रीपूर्वपदस्य–' | " | " |
| ७१ | १८ | 'सामान्यमपि–' | " | " |
| ७४ | " | 'अव्यतिरेकात्–' | " | " |
| ७५ | ११ | 'रसादिभ्य.– | " | " |
| ७६ | १५ | 'न हि तद्धितान्त–' | भाष्यम् | पतञ्जलिः |
| ७७ | २५ | 'हरीतक्यादिषु–' | वार्त्तिकम् | वररुचि |
| ७८ | १८ | 'गुणवचनाना–' | भाष्यम् | पतञ्जलिः |
| ८० | १४ | 'किमन्तात्–' | " | " |
| " | १५ | 'द्वितीयान्तात्–' | " | " |
| ८१ | ११ | 'एव तर्हि प्रथमान्तात्–' | " | " |
| " | १८ | 'यदि प्रथमान्तात्–' | " | " |
| " | २५ | 'तरपोक्तत्वात्–' | " | " |
| " | २७ | 'टाबपि तर्हि–' | " | " |
| " | २९ | 'उक्तेऽपि–' | " | " |
| ८२ | ८ | 'यदि सामयिकी–' | " | " |
| " | १० | 'अर्थतो व्यवस्था–' | " | " |
| " | २० | 'यावत् काली–' | " | " |

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | अन्यनाम | कर्तृनाम |
|---|---|---|---|---|
| ८२ | २५ | 'एवं तर्हि गुणः—' | भाष्यम् | पतञ्जलिः |
| ८४ | ११ | 'यथैवातिशेते—' | ,, | ,, |
| ,, | १२ | 'शेतिरकर्मकः—' | ,, | ,, |
| ,, | १४ | 'अकर्मकाः—' | ,, | ,, |
| ,, | १५ | 'कर्मापदिष्टा—' | ,, | ,, |
| ,, | २८ | 'गुणवचनानां—' | ,, | ,, |
| ८६ | ३ | 'स्त्रीसमानाधिकरणात् —' | वार्त्तिकम् | वररुचिः |
| ८७ | ७ | 'सिद्धं तु स्त्रियाः—' | ,, | ,, |
| ,, | २८ | 'मृतमियं ब्राह्मणी—' | भाष्यम | पतञ्जलिः |
| ८८ | ४ | 'कारणमियं ब्राह्मणी—' | ,, | ,, |
| ,, | , | 'आवपनमियमुष्ट्रिका—' | ,, | ,, |
| ,, | ९ | 'अथवा पुनरस्तु—' | ,, | ,, |
| ,, | १७ | 'स्त्रियाामति—' | वार्त्तिकम् | वररुचिः |
| ,, | २४ | 'प्रकृतिप्रत्ययार्थौ—' | भाष्यम् | पतञ्जलिः |
| ८९ | ९ | 'चलं हि गुणवृत्तं—' | ,, | ,, |
| ,, | १७ | 'गुणस्य चाश्रयता—' | वार्त्तिकम् | वररुचिः |
| ९० | २ | 'सर्वाश्च पुनर्मूर्तयः—' | भाष्यम् | पतञ्जलिः |
| ९२ | १२ | 'भावस्य च—' | वार्त्तिकम् | वररुचिः |
| ९४ | ५ | 'स्वाभाविकत्वात्—' | ,, | ,, |
| ९६ | [illegible] | 'नेदं वाचनिकं—' | भाष्यम् | पतञ्जलिः |
| ९७ | २ | 'अथवाश्रयतो—' | ,, | ,, |
| ९९ | ,, | 'क्रियानुपक्रमे—' | ,, | ,, |
| १०० | ७ | 'याभ्या नैकं—' | ,, | ,, |
| ,, | २७ | 'पदार्थाभिधाने—' | वार्त्तिकम् | वररुचिः |
| ,, | २८ | 'नञानभिहितत्वात्—' | ,, | ,, |
| १०१ | १९ | 'भवेत् सिद्धं—' | भाष्यम् | पतञ्जलिः |

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| १०१ | २१ | 'नेदमुभयं—' | भाष्यम् | पतञ्जलिः |
| १०२ | १५ | 'सामान्यस्यैव—' | ,, | ,, |
| ,, | १६ | 'सामान्यमपि—' | ,, | ,, |
| १०३ | ८ | 'अथवा विभक्त्यर्थः—' | ,, | ,, |
| ,, | २२ | 'विभक्त्यर्थाभिधाने—' | वार्तिकम् | वररुचिः |
| ,, | २४ | 'सिद्ध तु यथा—' | ,, | ,, |
| १०५ | ,, | 'यदि तर्हि विभक्त्यर्थो—' | भाष्यम् | पतञ्जलिः |
| १०६ | १३ | 'अन्यपद इत्येतावता—' | ,, | ,, |
| १०७ | २ | 'यदि तर्हि कृत्स्नः—' | ,, | ,, |
| ,, | २५ | 'लैङ्गेषु तावदुक्तं—' | ,, | ,, |
| ,, | २७ | 'साङ्ख्येष्वप्युक्त—' | ,, | ,, |
| १०८ | ९ | 'अर्थतो व्यवस्था' | ,, | ,, |
| ,, | १९ | 'पदार्थाभिधाने—' | वार्तिकम् | वररुचिः |
| ,, | २० | 'नवानभिहितत्वाद् —' | ,, | ,, |
| ,, | २६ | 'एतच्चात्र युक्तम्—' | भाष्यम् | पतञ्जलिः |
| ११० | ११ | 'सर्वपश्चात्पद—' | ,, | ,, |
| ११३ | ,, | 'नवानभिहितत्वात् —' | वार्तिकम् | वररुचिः |
| ११४ | १९ | 'अर्थानादेशनाद् —' | ,, | ,, |
| ,, | २६ | 'किंप्रधानोऽयं—' | भाष्यम् | पतञ्जलिः |
| ११९ | १४ | 'तदर्थगतेर्वा' | वार्तिकम् | वररुचिः |
| १२० | २ | 'सिद्धं तु विशेषण—' | ,, | ,, |
| १२१ | २८ | 'नलिवयुक्तमन्य—' | ,, | ,, |
| १२२ | १० | 'अथवा सर्व इमे—' | भाष्यम् | पतञ्जलिः |
| ,, | १५ | 'तपःश्रुतं च—' | ,, | ,, |
| ,, | १९ | 'तैलं भुक्तं—' | ,, | ,, |
| ,, | २३ | 'तपःश्रुताभ्यां—' | ,, | ,, |

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| १२४ | २७ | 'अप्रातिपदिकमानमेत्युक्ते—' | भाष्यम् | पतञ्जलि. |
| १२५ | ५ | 'अथेह राजपुरुषं—' | " | " |
| " | ८ | 'कः पुनरसौ' | " | " |
| " | " | 'निवृत्तपदार्थकः—' | " | " |
| " | २१ | 'यदि स्वाभाविकी—' | " | " |
| " | २३ | 'अथ वाचनिकी—' | " | " |
| १२६ | २ | 'कीलप्रतिकीलवत्—' | " | " |
| " | ४ | 'समन्धकारे—' | " | " |
| " | १२ | 'यदि पुनरयं निवृत्त—' | " | " |
| " | १८ | 'एवं यथा विज्ञायेत—' | " | " |
| १२७ | ६ | 'नञिवयुक्तमन्य— | वार्त्तिकम् | वररुचिः |
| " | ८ | 'सन्देहात्— | भाष्यम् | " |
| " | २६ | 'इदं खल्वपि— | " | " |
| १२८ | ७ | 'पाठात् पर्युदासः—' | " | " |
| " | ८ | 'त्वतल्भ्यां नञ्समासः—' | " | " |
| " | ९ | 'नात्र त्वतलौ प्राप्नुतः— | " | " |
| " | २७ | 'अतोऽन्यो भावप्रत्ययः—' | " | " |
| १२९ | २ | 'किमत्र संगृहीतं—' | " | " |
| १३० | १७ | 'कथं पुनरेकस्य—' | " | " |
| " | २३ | 'प्रसज्याय क्रियां—' | " | " |
| १३१ | १६ | 'यद्यपि तावदत्रैतत्—' | " | " |
| " | १७ | 'भवत्येवञ्जातीयकेष्वप्येकस्य —' | " | " |
| १३२ | ६ | 'तद्यथा न न एकं—' | " | " |
| " | २६ | 'वृत्तिभेदप्रयोजकं—' | योगसूत्रम् | पतञ्जलिः |
| १३५ | २९ | नञोऽस्त्यर्थानां—' | वार्त्तिकम् | वररुचिः |
| १३६ | ४ | 'यथान्यपदार्थप्रधानः— | भाष्यम् | पतञ्जलिः |

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | अन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| १३६ | १२ | 'प्रासादिषु—' | वार्त्तिकम् | वररुचिः |
| " | " | 'उपसर्जनह्रस्व—' | " | " |
| १३७ | ४ | 'अव्ययसंज्ञा—' | भाष्यम् | पतञ्जलिः |
| " | १६ | 'पाठेनाव्यय—' | " | " |
| " | " | 'यश्चेहार्थोऽभिधीयते—' | " | " |
| " | २२ | 'नेदं वाचनिकं—' | " | " |
| १३८ | १६ | 'अथवा गुणवचनानां—' | " | " |
| १४१ | १३ | 'आकृत्यभिधानाद्वैकं—' | वार्त्तिकम् | वररुचिः |
| " | १४ | 'लिङ्गवचनासिद्धिः—' | " | " |
| " | १८ | 'गुणविवक्षा—' | " | " |
| " | १९ | 'गुणवचनत्वा—' | " | " |
| " | २२ | 'अख्याविशेषादाकृति—' | " | " |
| १४३ | १७ | 'तस्माच्च वैयाकरणे —' | भाष्यम् | पतञ्जलिः |
| " | २५ | 'सत्त्वानप्रसवौ—' | " | " |
| " | २९ | 'कस्य पुन सत्त्वानं—' | " | " |
| " | ३० | 'गुणानां—' | " | " |
| १४४ | १० | 'प्रकृतिः खल्वपि नित्या—' | " | " |
| " | १४ | 'वर्धते यावदनेन—' | " | " |
| " | १७ | 'सर्वाश्च पुनर्मूर्तयः—' | " | " |
| १४५ | २२ | 'चितिशक्ति—' | योगसूत्रभा-[ष्यम्] | वेदव्यासः |
| १४६ | ३ | 'तथोभय सर्वत्र—' | भाष्यम् | पतञ्जलिः |
| " | ५ | 'न केवला प्रकृतिः—' | " | " |
| " | ६ | 'तद्धितार्थनिर्देशे—' | वार्त्तिकम् | वररुचिः |
| १४७ | २५ | 'अथ यस्य द्रव्यं—' | भाष्यम् | पतञ्जलिः |
| १४८ | १० | 'यदि कदाचिदाकृति—' | " | " |
| १४९ | ५ | 'न ह्याकृतिपदार्थकस्य—' | " | " |

| पृष्ठम् | पङ्क्तिः | सूक्तवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| १४१ | ९ | 'कस्यचित्तु किंचित्—' | | |
| १५२ | २७ | 'लिङ्गवचनसिद्धि—' | " | " |
| १५४ | ५ | 'सामान्ये वृत्तस्य—' | वार्तिकम् | वररुचिः |
| " | १२ | 'अधिकरणगतिः—' | भाष्यम् | पतञ्जलिः |
| १५७ | १९ | 'कस्यचित्तु किंचित्—' | वार्तिकम् | वररुचिः |
| " | २५ | 'चोदनासु च—' | भाष्यम् | पतञ्जलिः |
| १५८ | २१ | 'यदि सत्यापि—' | " | " |
| " | २८ | 'गुणवचनवदाश्रयतो—' | " | " |
| १५९ | ६ | 'मानं हि नामानिर्ज्ञात—' | " | " |
| १६१ | २३ | 'सहस्रवृत्तावेकत्वं—' | | " |
| १६३ | १९ | 'रोलम्बगरलव्याल—' | वाक्यपदीयम् | भर्तृहरिः |
| १६४ | १० | 'ईर्ष्याविशेन फलगत्व—' | — | — |
| १६५ | २२ | 'सामान्यमाश्रितं—' | — | — |
| १६६ | २१ | 'यथात्यन्ताय—' | वाक्यपदीयम् | भर्तृहरिः |
| १६९ | ७ | 'मानं हि नामानिर्ज्ञात—' | भाष्यम् | पतञ्जलिः |
| " | ९ | 'किं यद्वेवोपमानं—' | " | " |
| १७० | २ | 'रूपसामान्याद्वा—' | " | " |
| " | ६ | 'तानेव शालीन्—' | वार्तिकम् | वररुचिः |
| " | ६ | 'चत्वारो ब्राह्मणाः—' | भाष्यम् | पतञ्जलिः |
| " | १३ | 'कथं हि द्रको नाम—' | " | " |
| १७१ | १३ | 'यदि यद्वेवोपमानं—' | " | " |
| १७२ | २ | 'एवं तर्हि यत्र—' | " | " |
| " | १७ | 'यत्र किंचित् सामान्यम्—' | " | " |
| " | १९ | 'न चावश्यं स एव—' | " | " |
| १७५ | ८ | 'यत्र किंचित् सामान्यं—' | " | " |
| " | १३ | 'किं वक्तव्यमेतत्—' | " | " |

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| १७५ | १६ | 'कामं तर्ह्येतेनैव—' | भाष्यम् | पतञ्जलिः |
| १७६ | २ | 'तत्र यं प्रति साध्यत्व—' | वाक्यपदीयम् | भर्तृहरिः |
| ,, | १० | 'किं पुनरिहोदाहरणं—' | भाष्यम् | पतञ्जलिः |
| ,, | २१ | 'संख्यासमानाधिकरण—' | वार्तिकम् | वररुचिः |
| १७७ | २ | 'प्राक् कडारात्—' | भाष्यम् | पतञ्जलिः |
| ,, | ४ | 'प्राक् कडारादेका—' | ,, | ,, |
| ,, | ११ | 'यद्येवं शाली—' | ,, | ,, |
| ,, | १९ | 'उपसर्जनह्रस्व—' | ,, | ,, |
| ,, | २१ | 'यदि तर्ह्युपसर्जनानि—' | ,, | ,, |
| ,, | २९ | 'बहुव्रीहावनेक—' | वार्तिकम् | वररुचिः |
| १७८ | ४ | 'उभयगतिरिह—' | भाष्यम् | पतञ्जलिः |
| १७९ | ९ | 'यदि पुनरुपसर्जनानि—' | ,, | ,, |
| १८१ | २ | 'उपसर्जनान्यप्येव—' | ,, | ,, |
| ,, | ५ | 'एवं तर्हि शस्त्र्यामेव—' | ,, | ,, |
| ,, | ६ | 'एवमपि गुणो—' | ,, | ,, |
| ,, | १२ | 'अनिर्दिश्यमानस्यापि—' | ,, | ,, |
| ,, | २० | 'तद्यथा चन्द्रमुखी—' | ,, | ,, |
| १८२ | १४ | 'एवमपि समानाधि—' | ,, | ,, |
| ,, | १७ | 'किं हि वचनान्न—' | ,, | ,, |
| ,, | २५ | 'यद्यपि तावत्—' | ,, | ,, |
| १८३ | १२ | 'न वा असौ—' | वार्तिकम् | वररुचिः |
| ,, | २० | 'एवं तर्हि तस्यामेव—' | भाष्यम् | पतञ्जलिः |
| १८४ | १० | 'एतद्यात्र युक्तं—' | ,, | ,, |
| १८५ | ४ | 'यदि तावदेव—' | ,, | ,, |
| १८६ | ४ | 'तस्यामेवोभयं—' | ,, | ,, |
| ,, | ६ | 'उपमानसमासे—' | वार्तिकम् | वररुचि |

| पृष्ठम् | पङ्क्तिः | सूतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| १८६ | १० | 'साधारणं—' | वार्तिकम् | वररुचिः |
| ,, | २० | 'गुणानामाश्रयाद्—' | वाक्यपदीयम् | भर्तृहरिः |
| १८७ | ९ | न चात्रद्रव्यं—' | भाष्यम् | पतञ्जलिः |
| ,, | ११ | 'न वा श्याम—' | वार्तिकम् | वररुचिः |
| ,, | २१ | 'अथवा सामान्य—' | भाष्यम् | ,, |
| १९१ | २ | 'इदमयुक्तं वर्तते—' | पतञ्जलि. | ,, |
| ,, | २० | 'यत् तृतीया—' | ,, | ,, |
| १९५ | १७ | यदि यदेवोपमानं—' | ,, | ,, |
| ,, | २२ | 'अथान्यदुपमानं—' | ,, | ,, |
| १९७ | २७ | 'उपपदमतिङिति—' | वार्तिकम् | वररुचिः |
| १९८ | २ | 'क्रियाप्रविशेषो वा—' | ,, | ,, |
| ,, | १५ | 'नैष दोषः—' | भाष्यम् | पतञ्जलिः |
| ,, | ,, | 'समुदायेषु—' | ,, | ,, |
| ,, | १७ | 'यत् तृतीया—' | ,, | ,, |
| ,, | २२ | 'सर्वे एते—' | ,, | ,, |
| २०१ | २६ | 'न वै द्रव्यस्य—' | ,, | ,, |
| २०२ | ५ | 'अभिमन्त्रोदात्तं—' | ,, | ,, |
| ,, | २१ | 'अनैवेदम्—' | ,, | ,, |
| २०४ | ४ | 'अर्थविशेष—' | ,, | ,, |
| २०८ | २० | 'सर्वे एते—' | ,, | ,, |
| २१२ | २१ | 'समुदायेषु—' | ,, | ,, |
| २१३ | १२ | ,, ,, | ,, | ,, |
| ,, | १८ | 'पूर्वे पञ्चालाः—' | ,, | ,, |
| ,, | १९ | 'तैलं भुक्त—' | ,, | ,, |
| ,, | २२ | 'नेक्षिता जातिशब्दानां—' | वाक्यपदीयम् | भर्तृहरिः |
| २१५ | २७ | 'एवमर्थसमुदाये—' | भाष्यम् | पतञ्जलिः |

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| २१७ | १३ | 'अपिचान्ययेषु—' | भाष्यम् | पतञ्जलि |
| " | १८ | 'कथमेरं तत्रैन—' | " | " |
| २२० | ६ | 'सामान्यमपि—' | " | " |
| २२२ | ६ | 'यदि तर्हि तृतीया—' | " | " |
| " | २५ | 'पुन्नाम्नो नरकाद्—' | स्मृति | मनु |
| २२३ | १० | 'अस्तु तर्हि प्रत्ययार्थ—' | भाष्यम् | पतञ्जलि |
| " | २७ | एवमपि तृतीया—' | " | " |
| २२४ | २२ | 'नैष दोष—' | " | " |
| २२५ | ७ | 'तुल्या च—' | " | " |
| २२६ | २१ | 'किं पुनरत्र ज्यायः—' | " | " |
| २२९ | २३ | 'किमर्थमिदमुच्यते—' | " | " |
| २३७ | १६ | 'न काचिदिवशब्देन—' | " | " |
| २३८ | २ | 'ननु च सप्तम्यपि—' | " | " |
| " | २५ | 'उपमाने यः संशयः—' | " | " |
| २३९ | १६ | 'एवं तर्हि सिद्धे' | " | " |
| " | २३ | 'नित्यं परिभर्हातव्यं—' | " | " |
| २४० | २२ | 'किमर्थमिदमुच्यते—' | " | " |
| २४१ | ७ | 'तेन तुल्यमित्येव—' | " | " |
| २४२ | २३ | 'न सिध्यति—' | " | " |
| २४३ | १२ | 'चिच्छेद कृतहस्तवत्—' | महाभारतम् | व्यास |
| " | १७ | 'पाण्डोर्विदुर—' | " | " |
| २४५ | २२ | 'चिच्छेदकृतहस्तवत्—' | " | " |
| २४६ | ७ | 'इन्द्र इव सुपस्तूयसे—' | ऋग्वेदः | " |
| " | २५ | 'रामरावणयोर्युद्धं—' | रामायणम् | वाल्मीकि |
| २४७ | १७ | 'अङ्गदा—' | भाष्यम् | पतञ्जलि |

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| २६४ | २९ | 'समासेनोक्तार्थत्वात् —' | भाष्यम् | पतञ्जलिः |
| २६५ | ६ | 'द्वाविवार्थौ—' | ,, | ,, |
| २६७ | २५ | चयद्वृहतो—' | वार्तिकम् | वररुचिः |
| २७१ | १९ | अग्निर्माणवकः—' | भाष्यम् | पतञ्जलिः |
| २७२ | ४ | 'मकारे मर्वेषां—' | वार्तिकम् | वररुचिः |